ADDITIONAL EXERCISES :—

ततः प्रविशति विषण्णः विदूषकः ।

( निःश्वस्य ) भोः दृष्टम् । एतस्य मृगयायामनुरक्तस्य नृपस्य सख्येन निर्विण्णः[1] अस्मि । एषः मृगः, एषः वराहः, एषः शार्दूलः, इति मध्याह्नेऽपि ग्रीष्मेण विरलासु पादपानां च्छायास्वाहिण्डाम्यटव्याः[2] अटवीम् । कदापि मांसस्याहारं खादामि । तुरगस्यानुधावनात् गात्राणि[3] पीडितानि भवन्ति, तेन निशायामपि निकामं[4] शयितव्यं[5] नास्ति । ततः प्रभाते एव दास्याःपुत्राणां[6] लुब्धकानां[7] कोलाहलेन प्रबुद्धः भवामि । इदानीमेतेनापि[8] पीडा न निष्क्रामेति । ततः गण्डस्योपरि[10] पिण्डकैः[11] संवृत्तः । ह्यः[12] किल वयमवहीनाः[13], तस्मात् तेनास्माकं प्रियवयस्येन, मृगस्यानुसरणात् आश्रमं प्रविष्टेन, तापसस्य कन्यका ममाधन्यतया दृष्टा । साम्प्रतं नगरं गन्तुमपि नेच्छति । अद्यापि सः तामेव चिन्तयति । कः उपायः ? एषः अधुना यवनीभिः परिवृतः[14] इतः एवागच्छति प्रियवयस्यः । अङ्गस्य भङ्गैः विकलैः[15] इव भूत्वात्र तिष्ठामि ।

[ इति दण्डमवलम्ब्य स्थितः । ]

—शाकुन्तलम् ( Adapted )

HOME-WORK :—

( A ) Answer the following questions in Sanskrit :—

१ मालाकारः किमर्थं खिन्नः ?

२ मालाकारस्य मोदाय किं भवति ?

३ कुत्र गता मञ्जरी ? कुत्र च गतः अनिलः ?

४ मालाकारस्य का कला ? तस्याः किं जातम् ?

५ मालाकारस्य श्रमस्य किं फलम् ?

( B ) Write a grammatical note on the following :—

मोदायोदरस्य पोषणाय चैषा कल्पते ।

---

1 Dejected; 2 Forest; 3 Limb; 4 Enough; 5 Sleep; 6 Bastard; 7 Hunter; 8 Now; 9 Disappear; 10 A boil; 11 A pimple; 12 Yesterday; 13 Absent-minded; 14 Surrounded; 15 Withered; worn out.

# सप्तमः पाठः

## श्यामलकः अर्धचन्द्रेण ।



आसीत् अत्र धरापीठे विकण्टकं नाम पुरम् । तत्रेश्वरः नाम धनाढ्यः वैश्यः वसति स्म । तस्य जामातृकाः अवन्तीपीठात् प्राघूर्णिकाः विकण्टकं पुरमागच्छन् । सः तान् दृष्ट्वातीवामोदत, गौरवेणासेवत च । तत्र ते प्रभूतं कालमवसन् । ततः ईश्वरः निजां भार्यामभाषत । "एते जामातृकाः निजानि गृहाण्यद्यापि न गच्छन्ति । अपमानात् विना न निवर्तन्ते" इति । तद् अद्य तेभ्यः पादान् प्रक्षालयितुं जलं न देयम् । ततः गर्गः जलस्यादानेन, सोमः अल्पस्यासनस्य दानेन, दत्तः कुभोजनात् निरगच्छत् । परं श्यामलकः न प्राचलत् । ततः सः श्वशुरेणार्धचन्द्रं दत्वा गृहात् बहिः निरस्तः ।

—पञ्चतन्त्रम् ( Adapted )

## VOCABULARY

अदान ( *n.* ) Not giving.

अर्धचन्द्र ( *m.* ) Seizing by the neck and expelling.

कुभोजन ( *n.* ) A bad meal.

दत्त्वा ( *Ger.* ) Having given.

देय ( *pot. pass. p.* ) To be given; that which should be given.

धनाढ्य ( *Adj* ) Rich.

धरापीठ ( *n.* ) The earth.

निरस्त ( *pp. pass.* ) Expelled; driven out.

निर् + गम् [ निर्गच्छति ] To go out.

नि + वृत् [ निवर्तते ] To return.

परम् ( *Indecl.* ) But.

प्रक्षालयितुम् ( *Inf.* ) For the purpose of washing; in order to wash.

प्र + चल् [ प्रचलति ] To start; to move.

प्रभूत ( *Adj.* ) Plenty; many; much.

प्राघूर्णिक (*m.*) A guest; a visitor.

बहिः ( *Indecl.* ) Outside. [ Used with the Ablative of a noun.]

वस् [ वसति ] To dwell.

वैश्य ( *m.* ) A merchant.

सेव् [ सेवते ] To serve; to wait upon.

स्म ( *Indecl.*) An explative. [ When used with the forms of the present tense, it gives the sense of the past tense.]

GRAMMAR :—

### IMPERFECT TENSE.

| Parasmaipada Terminations. | | | Ātmanepada Terminations. | | |
|---|---|---|---|---|---|
| अम् | व | म | इ | वहि | महि |
| स् | तम् | त | थास् | इथाम् | ध्वम्. |
| त् | ताम् | अन् | त | इताम् | अन्त |

**Rules:**—1. The augment ‘ अ ’ is prefixed to the root, if the root begins with a consonant. If it begins with a vowel ‘ आ ’ is prefixed instead of ‘ अ ’.

2. This augment is added directly to the root. If a preposition is prefixed to the root, the augment will come between the preposition and the root.

3. When the augment 'आ' is added to the roots beginning with vowels, the result of the combination of this 'आ' with the initial vowel of the root is the *vridhi* substitute of the latter.

## Párasmaipada

**First conjugation**

भू

| | | |
|---|---|---|
| अभवम् | अभवाव | अभवाम |
| अभवः | अभवतम् | अभवत |
| अभवत् | अभवताम् | अभवन् |

**Fourth conjugation**

शुष्

| | | |
|---|---|---|
| अशुष्यम् | अशुष्याव | अशुष्याम |
| अशुष्यः | अशुष्यतम् | अशुष्यत |
| अशुष्यत् | अशुष्यताम् | अशुष्यन् |

**Sixth conjugation**

कृष्

| | | |
|---|---|---|
| अकृषम् | अकृषाव | अकृषाम |
| अकृषः | अकृषतम् | अकृषत |
| अकृषत् | अकृषताम् | अकृषन् |

**Tenth conjugation**

मार्ग्

| | | |
|---|---|---|
| अमार्गयम् | अमार्गयाव | अमार्गयाम |
| अमार्गयः | अमार्गयतम् | अमार्गयत |
| अमार्गयत् | अमार्गयताम् | अमार्गयन् |

## Ātmanepada

**First conjugation**

क्रम्

| | | |
|---|---|---|
| अक्रमे | अक्रमावहि | अक्रमामहि |
| अक्रमथाः | अक्रमेथाम् | अक्रमध्वम् |
| अक्रमत | अक्रमेताम् | अक्रमन्त |

**Fourth conjugation**

जन् ( जा )

| | | |
|---|---|---|
| अजाये | अजायावहि | अजायामहि |
| अजायथाः | अजायेथाम् | अजायध्वम् |
| अजायत | अजायेताम् | अजायन्त |

**Sixth conjugation**

मृ ( म्रिय् )

| | | |
|---|---|---|
| अम्रिये | अम्रियावहि | अम्रियामहि |
| अम्रियथाः | अम्रियेथाम् | अम्रियध्वम् |
| अम्रियत | अम्रियेताम् | अम्रियन्त |

**Tenth conjugation**

सान्त्व्

| | | |
|---|---|---|
| असान्त्वये | असान्त्वयावहि | असान्त्वयामहि |
| असान्त्वयथाः | असान्त्वयेथाम् | असान्त्वयध्वम् |
| असान्त्वयत | असान्त्वयेताम् | असान्त्वयन्त |

| Parasmaipada | | | Ātmanepada | | |
|---|---|---|---|---|---|
| A root with a prefix | | | A root with a prefix | | |
| निर्+गम् | | | प्र+स्था | | |
| निरगच्छम् | निरगच्छाव | निरगच्छाम | प्रातिष्ठे | प्रातिष्ठावहि | प्रातिष्ठामहि |
| निरगच्छः | निरगच्छतम् | निरगच्छत | प्रातिष्ठथाः | प्रातिष्ठेथाम् | प्रातिष्ठध्वम् |
| निरगच्छत् | निरगच्छताम् | निरगच्छन् | प्रातिष्ठत | प्रातिष्ठेताम् | प्रातिष्ठन्त |
| A root beginning with a vowel | | | A root beginning with a vowel | | |
| इष् ( इच्छ् ) | | | ईक्ष् | | |
| ऐच्छम् | ऐच्छाव | ऐच्छाम | ऐक्षे | ऐक्षावहि | ऐक्षामहि |
| ऐच्छः | ऐच्छतम् | ऐच्छत | ऐक्षथाः | ऐक्षेथाम् | ऐक्षध्वम् |
| ऐच्छत् | ऐच्छताम् | ऐच्छन् | ऐक्षत | ऐक्षेताम् | ऐक्षन्त |

अस् ( Irregular )

| | | |
|---|---|---|
| आसम् | आस्व | आस्म |
| आसीः | आस्तम् | आस्त |
| आसीत् | आस्ताम् | आसन् |

LANGUAGE-STUDY :—

१ ततः गर्गः जलस्यादानेन, सोमः अल्पस्यासनस्य दानेन, दत्तः कुभोजनात् निरगच्छत् ।

वृक्षाणां सेचनं, आधाराणां बन्धनं, कीटानां निवारणं, तृणानामुत्पाटनं च नूनं कष्टमयमस्ति ।

If there are several Nominatives in different numbers and belonging to the same person and connected by '*and*' standing as subjects to a common predicate, the predicate agrees with their combined number and their common person.

If the Nominatives belong to different persons, the common predicate will agree with their combined number. As regards the person, it will agree with the *first person*, if any one of the Nominatives belongs to the first person, and with the *second person*, if the Nominatives belong only to the second and the third persons.

But, if the predicate is understood separately with each of these subjects, it is made to agree with the nearest subject in *number and person* as in the above sentences.

PECULIAR CONSTRUCTIONS :—

१ सः श्वशुरेण गृहात् बहिः निरस्तः ।

ADDITIONAL EXERCISES :—

## नृपस्य मित्रम् ।

कस्यचित् भूपस्य नित्यं वानरः अङ्गसेवकः[1] अतिभक्तिपरः[2] अन्तःपुरेऽप्यप्रतिषिद्धः[3] आसीत् । सः च तस्य भूपस्यातिविश्वासस्य स्थानमभवत् । एकदा भूपालः निद्रामगच्छत् । सः वानरः तं वीजयितुं[4] व्यजनमानयत्[5] । तदा तेन वानरेण नृपस्य वक्षःस्थलस्योपरि[6] काचित् मक्षिका[7]उपविष्टा[8] दृष्टा । व्यजनेन सा मुहुर्मुहुः[9] प्रतिषिद्धा, परं पुनः पुनः तत्रैव सा समुपाविशत्[10] । ततः तेन स्वभावात् चपलेन मूर्खेण क्रुद्धेन च वानरेण तीक्ष्णं खड्गमादाय[11] तस्याः उपरि प्रहारः विहितः[12] । ततः मक्षिकोड्डीय[13] गता । परं तेन प्रहारेण नृपस्य वक्षःस्थलं द्विधा[14] जातम् । नृपः ततः अम्रियत च । तस्मात् नृपेण मूर्खः अनुचरः[15] न रक्षणीयः[16] ।

—पञ्चतन्त्रम् ( Adapted )

---

1 Attendant; 2 Devoted; 3 Not prohibited; 4 To fan; 5 A fan; 6 The chest; 7 A fly; 8 Seated; 9 Often; 10 To sit; 11 Having taken; 12 Gave; 13 Having fled; 14 In two parts; 15 Attendant; 16 Fit to be kept.

TRANSLATE:—

Many people say that the Āryans came to Āryāvarta. Formerly they lived in the polar regions. Long ago there was a (heavy) snowstorm there. On account of that they went hither and thither. At that time they went to different countries.

Their complexion was fair. Their noses were straight. Their bodies were well-built. They had* weapons and they were also well-acquainted with sciences. They worshipped many gods. The principal among those gods were Indra, Soma, Sūrya, and Varuṇa. Having come to Bhārtavarṣa, they composed the Vedas. In these Vedas there are various interesting hymns composed by them. (in praise) of these gods Sanskrit is the language of the Āryans.

**New words**:—**आर्यः; वद् ; ध्रुवप्रदेशः; वर्षावः; इतस्ततः; विविध; देशः; वर्णः; गौर; नासिका; सरल; असित; शरीरम् ; भव्य; शस्त्रम् ; शास्त्रम् ; देवता; प्रमुख; बुध् ; वेदाः; रच् ; रचित; स्तवनम् ; भाषा; संस्कृतम्.**

HOME-WORK :—

(1) Describe the land of the Āryans in about ten lines.

(2) Conjugate fully in the Imperfect :—**वस्, मुद्** and **सेव्**.

(3) Translate the story "**नृपस्य मित्रम्**"

---

* There is no equivalent of the root 'to have' in Sanskrit. Therefore sentences in which the root 'to have' has been used must be translated into Sanskrit by using the forms of **अस्** (to be) with the Genitive of the subject of 'have.'

E. g. I have a book.— **मम पुस्तक मस्ति ।**

This book has a hundred leaves.—

**एतस्य पुस्तकस्य शतं पत्राणि सन्ति ।**

# अष्टमः पाठः

## प्रार्थना ।

रावणेन वित्रस्ताः सुराः इन्द्रं पुरस्कृत्य क्षीरसमुद्रमगच्छन् । तत्र त[1] ईश्वरं प्रार्थयन्त । यथा—

" हे देव, त्वमधुना निद्रां त्यज । उत्तिष्ठ । अस्मान् पश्य च । रावणः ब्रह्मदेवस्य वरात् दृप्तः । अस्मान् अतीव पीडयति । जनान् निषूदयति । धर्मं विध्वंसते । ललनाः अपहरति । हे देवाधिदेव, रक्षास्मान् । विलोकयस्व नः । त्वमस्माकं दयस्व । त्रायस्व नः एतस्मात् घोरात् व्यसनात् । एषः इन्द्रः, एषः वरुणः, एषः सोमः, एषः सूर्यः । एवमखिलाः अपि देवाः अत्रोपस्थिताः । सूर्यः दिवा प्रकाशितुमपि लज्जते । एषः पवनः मन्दं मन्दमेव वहति ।

" नारायण, मुञ्च शयनम् । अवबोध नः घोरं सङ्कटम् । आपृच्छस्व दयितां लक्ष्मीम् । त्वरस्व च शीघ्रं दैत्यानां नाशाय । त्वमेवास्माकं शरणम् ।

" त्रायस्व पुण्डरीकाक्ष भक्तानामभयङ्कर " इति ।

ततः प्रसन्नः नारायणः शयनं त्यक्त्वा देवेभ्यः दर्शनमयच्छत् । सः अभाषत—

" मा भीताः भवत । अहं शीघ्रमेव जीवलोकं गत्वा तं पापं निषूदयामि । यूयमपि तानि तानि वानराणां कुलानि पुत्ररूपेण भूषयध्वम् " । इत्युक्त्वा सः अन्तर्धानमगच्छत् । देवाः च विस्मिताः स्वर्गं प्रति न्यवर्तन्त ।

VOCABULARY

अन्तर्धान ( *n.* ) Disappearing.

अभयङ्कर ( *Adj.* ) Destroyer of fear.

अव + बुध् [ अवबोधति ] To know.

आ + प्रच्छ् [ आपृच्छते ] To take leave of.

उक्त्वा ( *Ger.* ) Having spoken.

उपस्थित (*pp. pass.*) Approached.

---

१ ते + ईश्वरं = त ईश्वरं.

त्रै [ त्रायते ] To protect; to save. [Used with the Ablative of a noun.]
त्वर् [ त्वरते ] To hurry up; to make haste.
दय् [ दयते ] To take pity or compassion. [Used with the Genitive of a noun.]
दयिता (*f.*) A beloved one.
दिवा (*Indecl.*) By day.
दृप्त (*pp. pass.*) Arrogant; puffed up with pride.
दृश् [ पश्यति ] To see.
नि + सूद् [ निषूदयति ] To kill.
पाप (*m.*) A wicked man.
पुरस्कृत्य (*Ger.*) Having placed in front.
मा (*Indecl.*) Not. [A prohibitive particle.]
मुच् ( मुञ्चति ) To give up; to release.
वह् ( वहति ) To Carry; to blow; to flow.
वित्रस्त (*pp. pass.*) Troubled; terrified.
वि + लोक् [ विलोकयति–ते ] To see.

GRAMMAR :—

## IMPERATIVE MOOD.

| Parsmaipada Terminations | | | Ātmanepada. Terminations. | | |
|---|---|---|---|---|---|
| आनि | आव | आम | ऐ | आवहै | आमहै |
| • | तम् | त | स्व | इथाम् | ध्वम् |
| तु | ताम् | अन्तु | ताम् | इताम् | अन्ताम् |
| | भू | | | क्रम् | |
| भवानि | भवाव | भवाम | क्रमै | क्रमावहै | क्रमामहै |
| भव | भवतम् | भवत | क्रमस्व | क्रमेथाम् | क्रमध्वम् |
| भवतु | भवताम् | भवन्तु | क्रमताम् | क्रमेताम् | क्रमन्ताम् |
| | शुष् | | | जन् ( जा ) | |
| शुष्याणि | शुष्याव | शुष्याम | जायै | जायावहै | जायामहै |
| शुष्य | शुष्यतम् | शुष्यत | जायस्व | जायेथाम् | जायध्वम् |
| शुष्यतु | शुष्यताम् | शुष्यन्तु | जायताम् | जायेताम् | जायन्ताम् |

| कृष् | | | मृ ( म्रिय् ) | | |
|---|---|---|---|---|---|
| कृषाणि | कृषाव | कृषाम | म्रियै | म्रियावहै | म्रियामहै |
| कृष | कृषतम् | कृषत | म्रियस्व | म्रियेथाम् | म्रियध्वम् |
| कृषतु | कृषताम् | कृषन्तु | म्रियताम् | म्रियेताम् | म्रियन्ताम् |
| मार्ग् | | | सान्त्व् | | |
| मार्गयाणि | मार्गयाव | मार्गयाम | सान्त्वयै | सान्त्वयावहै | सान्त्वयामहै |
| मार्गय | मार्गयतम् | मार्गयत | सान्त्वयस्व | सान्त्वयेथाम् | सान्त्वयध्वम् |
| मार्गयतु | मार्गयताम् | मार्गयन्तु | सान्त्वयताम् | सान्त्वयेताम् | सान्त्वयन्ताम् |

अस् ( Irregular. )

| | | |
|---|---|---|
| असानि | असाव | असाम |
| एधि | स्तम् | स्त |
| अस्तु | स्ताम् | सन्तु |

SANDHI RULES :—

S. R. No. 7.

| Final | Initial | Result |
|---|---|---|
| ए | Any vowel except अ. | ए is changed to अ or अय्. |
| ओ | Any vowel except अ. | ओ is changed to अ or अव्. |
| ऐ | Any vowel. | ऐ is changed to आ or आय्. |
| औ | Any vowel. | औ is changed to आ or आव्. |

**Note :**—The resulting अय्, आय्, अव्, and आव् combine with the initial vowel, while the अ and आ do not.

E. g.

| | | | | |
|---|---|---|---|---|
| ते | + ईश्वरम् | = त | ईश्वरम् | or तयीश्वरम् । |
| प्रभो | + आगच्छ | = प्रभ | आगच्छ | or प्रभवागच्छ । |
| ईक्षामहै | + आचार्यम् | = ईक्षामहा | आचार्यम् | or ईक्षामहायाचार्यम् । |
| बालौ | + ईक्षेताम् | = बाला | ईक्षेताम् | or बालावीक्षेताम् । |

S. R. No. 8.

ई, ऊ and ए standing at the end of *dual* forms do not combine with the following initial vowel.

So also the final ए and ओ of interjectional particles do not combine with the following vowel.

E. g. कवी अधिगच्छतः । तरू अवनमतः । बालिके एते । अरे इन्द्र । अहो आश्चर्यम् ।

PECULIAR CONSTRUCTIONS :—

१ त्वमस्माकं दयस्व ।
२ त्रायस्व नः एतस्मात् घोरात् व्यसनात् ।
३ आपृच्छस्व दयितां लक्ष्मीम् ।
४ मा भीताः भवत ।

ADDITIONAL EXERCISES:—

## महाश्वेतायाः विलापः ।

हा नाथ ! क्व[1] मामेकाकिनी[2]मशरणां[3] विमुच्य यासि[4] ? पृच्छ तरलिकां[5] तव कृते मया यानुभूतावस्था । प्रसीद । सकृत्[6] अप्यालप । ईषत्[7] अपि विलोकय । पूरय मे मनोरथम् । आर्तास्मि । भक्तास्मि । अनुरक्तास्मि । अनाथास्मि । बालास्मि । अगतिकास्मि । दुःखितास्मि । अनन्यशरणा[8]स्मि । किमिति न करोषि[9] दयाम् ? कथय किमपराद्धं[10], किं वा नानुष्ठितं[11] मया, कस्यां वा नाज्ञायामादृतं[12], येन कुपितः

1 Where; 2 Alone; 3 Helpless; 4 To go; 5 The name of Mahāśvetā's friend; 6 Once; 7 A little; 8 Having no other person to support; 9 To do; ( to take compassion ); 10 Committed ( a fault ); 11 Done; 12 Respected.

असि ? दासजनमकारणात् परित्यज्य व्रजसि। न भीतः असि कौलीनात् ? आः ! अहमद्यापि जीवामि। हा ! हतास्मि। धिक् मां दुष्कृतकारिणीं, यस्याः कृते तवेदृशी दशा वर्तते। नास्ति मत्सदृशी नृशंसहृदया, याहमेवंविधं त्वामुत्सृज्य गृहं गता। किं मे गृहेण, किमम्बया, किं तातेन, किं परिजनेन वा ? हा ! कमुपयामि शरणम् ? भगवत्यः वनदेवताः प्रसीदत, प्रयच्छतैतस्य प्राणान्।

—कादम्बरी ( Adapted )

TRANSLATE :—

Being infatuated with the beauty of Sītā, Rāvaṇa said to her, " O beautiful lady, I love you. Let the fear arising from me be destroyed. Obtain from me various kinds of garments and beautiful ornaments. O Maithilī, give up this foolishness of yours. I will conquer the whole world and give it to Janaka for your sake. Eat, drink and enjoy at your sweet will. Give away this land and wealth as you please. What is the use of Rāma, a dweller in the forest, to you ? "

Having heard this Sītā simply censured his shameless behaviour. Then Rāvaṇa said to the female demons, " Try to create love for me in the heart of Sītā "; and ( so saying ) he went away.

They advised her accordingly. Do you want to know the reply given to them by her ? Then read the next lesson.

**New words :—मोहित; सुन्दरी; कम्; समुत्थित; नश्; वस्त्रम्; दिव्य; अलङ्कारः; लभ्; मोहः; विजित्य; यथाकामम्; पा; रम्; वनचरः; किं प्रयोजनम्; आचरणम्; निन्द्; उत्पादयितुम्; प्रेमभावना; प्रत्युत्तरम्; उत्तर.**

HOME-WORK :—

1. Conjugate fully in the Imperative Mood :—

   नि+वृत् and भाष्.

2. Recognise the following forms :—

   पुरस्कृत्य; प्रार्थयन्त; त्वम्; दस्रः; वाम्; ललनाः; नः; आपृच्छस्व.

3. Address a short prayer to Saraswatī in your own words in Sanskrit.

---

13 To go; 14 Scandle; censure; 15 Sinful; 16 Hard-hearted.

# नवमः पाठः

## सीतायाः राक्षसीभ्यः प्रत्युत्तरम् ।

न हि मे जीवितैः अर्थः, नैवार्थैः, न च भूषणैः ।
रुद्धायाः राक्षसीमध्ये विना रामं महारथम् ॥ १ ॥
धिक् मामनार्यामसतीं याहं तेन विनाकृता ।
मुहूर्तमपि रक्षामि जीवितं पापजीविता ॥ २ ॥
का च मे जीविते श्रद्धा, सुखे वा, तं प्रियं विना ।
न चाप्यहं चिरं दुःखं सहेय प्रियवर्जिता ॥ ३ ॥
चरणेनापि सव्येन न स्पृशेयं निशाचरम् ।
रावणं किं पुनर् अहं कामयेय विगर्हितम् ॥ ४ ॥
छिन्ना, भिन्ना, विभक्ता, वा क्षिप्ता दीप्तेऽनलेऽथवा ।
रावणं नोपतिष्ठेय, किं प्रलापेन वः चिरम् ॥ ५ ॥
यदि मामवगच्छेत् तु सः रुद्धामिह राघवः ।
अचिरेण तु लङ्केषा श्मशानसदृशी भवेत् ॥ ६ ॥
यदि कश्चित् प्रयच्छेत् मे विषमद्य सुखं भवेत् ।
क्षिप्रं वैवस्वतं देवं पश्येयं बहु दुःखिता ॥ ७ ॥

—रामायणम् ( Adapted )

### VOCABULARY

अनल ( *m.* ) The fire.

अर्थ ( *m.* ) Use; wealth; meaning.

अव + गम् [ अवगच्छति ] To understand.

असती ( *f.* ) A bad or wicked woman.

उप + स्था [ उपतिष्ठते ] To wait upon; to worship.

कम् [ कामयते ] To love; to desire.

कश्चित् ( *m.* ) Some one.

किं पुनर् ( *Indecl.* ) Much less; much more.

क्षिप्त ( *pp. pass.* ) Thrown.

क्षिप्रम् ( *Indecl.* ) Soon; quickly.

धिक् ( *Indecl.* ) Fie upon! Cursed be! [ Used with the Accusative of a noun.]

निशाचर ( *m.* ) A demon.

पापजीविता ( *f.* ) A sinful woman.

प्रलाप ( *m.* ) Idle or meaningless talk.

**प्रियवर्जिता** (*f.*) Separated from the beloved.

**रुद्ध** (*pp. pass.*) Obstructed; confined; besieged.

**विगर्हित** (*pp. pass.*) Censured; contemptible.

**विनाकृत** (*pp. pass.*) Separated. [Used with the Instrumental of a noun.]

**विभक्त** (*pp. pass.*) Divided into pieces.

**वैवस्वत** (*m.*) The god of death.

**श्रद्धा** (*f.*) Love; devotion; confidence. [Used with the Locative of a noun.]

**सव्य** (*Adj.*) Left.

**सह्** [सहते] To bear; to suffer; to endure; to tolerate.

**स्पृश्** [स्पृशति] To touch.

GRAMMAR:—

POTENTIAL MOOD

| Parasmaipada Terminations | | | Ātmanepada Terminations | | |
|---|---|---|---|---|---|
| ईयम् | ईव | ईम | ईय | ईवहि | ईमहि |
| ईः | ईतम् | ईत | ईथाः | ईयाथाम् | ईध्वम् |
| ईत् | ईताम् | ईयुः | ईत | ईयाताम् | ईरन् |
| | भू | | | क्रम् | |
| भवेयम् | भवेव | भवेम | क्रमेय | क्रमेवहि | क्रमेमहि |
| भवेः | भवेतम् | भवेत | क्रमेथाः | क्रमेयाथाम् | क्रमेध्वम् |
| भवेत् | भवेताम् | भवेयुः | क्रमेत | क्रमेयाताम् | क्रमेरन् |
| | शुष् | | | जन् (जा) | |
| शुष्येयम् | शुष्येव | शुष्येम | जायेय | जायेवहि | जायेमहि |
| शुष्येः | शुष्येतम् | शुष्येत | जायेथाः | जायेयाथाम् | जायेध्वम् |
| शुष्येत् | शुष्येताम् | शुष्येयुः | जायेत | जायेयाताम् | जायेरन् |
| | कृष् | | | मृ (म्रिय्) | |
| कृषेयम् | कृषेव | कृषेम | म्रियेय | म्रियेवहि | म्रियेमहि |
| कृषेः | कृषेतम् | कृषेत | म्रियेथाः | म्रियेयाथाम् | म्रियेध्वम् |
| कृषेत् | कृषेताम् | कृषेयुः | म्रियेत | म्रियेयाताम् | म्रियेरन् |
| | मार्ग् | | | सान्त्व् | |
| मार्गयेयम् | मार्गयेव | मार्गयेम | सान्त्वयेय | सान्त्वयेवहि | सान्त्वयेमहि |
| मार्गयेः | मार्गयेतम् | मार्गयेत | सान्त्वयेथाः | सान्त्वयेयाथाम् | सान्त्वयेध्वम् |
| मार्गयेत् | मार्गयेताम् | मार्गयेयुः | सान्त्वयेत | सान्त्वयेयाताम् | सान्त्वयेरन् |

अस् ( Irregular )

| | | |
|---|---|---|
| स्याम् | स्याव | स्याम |
| स्याः | स्यातम् | स्यात |
| स्यात् | स्याताम् | स्युः |

LANGUAGE-STUDY:—

१ चरणेनापि सव्येन न स्पृशेयं निशाचरम्।
रावणं किं पुनर् अहं कामयेय विगर्हितम् ॥

Study carefully the meaning of the phrase "किं पुनर्" in the above verse. The phrase means "*much less*; *much more*."

The translation of the verse would be :—

I can not even touch the demon with my left foot; *much less* shall I be able to love him.

PECULIAR CONSTRUCTIONS:—

१ धिक् मामनार्याम्!
२ तेन विनाकृता, जीवितं रक्षामि।
३ का च मे जीविते श्रद्धा?
४ किं प्रलापेन वः चिरम्?

ADDITIONAL EXERCISES:—

लालयेत्[1] पञ्च वर्षाणि, दश वर्षाणि ताडयेत्।
प्राप्ते तु षोडशे वर्षे पुत्रे मित्रवत्[2] आचरेत् ॥
रूप-यौवन-सम्पन्नाः, विशाल-कुल-सम्भवाः[3]।
विद्याहीनाः न शोभन्ते निर्गन्धाः इव किंशुकाः[4] ॥
यावत् जीवेत् सुखं[5] जीवेत्, ऋणं कृत्वा घृतं[6] पिबेत्।
भस्मीभूतस्य[7] देहस्य पुनः आगमनं कुतः ॥

---

1 To fondle; 2 Like a friend; 3 Birth; 4 A kind of flower; 5 Happily; 6 Ghee; 7 Burnt to ashes.

TRANSLATE:—

Nala was the king of the country of Niṣadhas. He heard the praise of the good qualities and the beauty of Damayantī, the daughter of the king of the country of Vidarbhas; and he started for her Swayaṃvara.

On the road he met Indra, Varuṇa, Yama and Anala. Nala went to Damayantī as their messenger. He said to her, "O Damayantī, I have come from the gods. You should not give up the gods. You should marry the gods. Do not wish for Nala. Are not the gods superior to men? What qualities of Nala have you seen? The beauty of men is perishable. Wealth is fickle. Do not be proud of his learning. Do not be infatuated with his strength. You are clever. Therefore you should do what is proper". So saying and having done the work of the gods, Nala returned.

After that he went to the hall of Swayaṃvara. There Damayantī chose Nala in the presence of the gods.

**New words**:—निषधदेशः; विदर्भदेशः; श्रुत; स्वयंवरः; प्र + स्था; अनलः; दूतः; भाष्; त्यज्; परि + नी; इष्; अधिक; योग्य; नश्वर; चञ्चल; अभिमानं वह्; बलम्; मुह्; चतुर; उक्त्वा; मण्डपः; समक्षम्; वृत.

HOME-WORK:—

1. Give in your own words in Sanskrit the reply of Sītā.
2. Conjugate fully in the Potential Mood:—

   सद्, उप+स्था and पत्.

3. Use the following in your own sentences:—

   विनाकृत, किं पुनर् and क्षिप्.

4. Answer the following questions in Sanskrit:—

   (अ) किमर्थं सीतायाः जीवितैः न प्रयोजनम्?

   (आ) अपि सीतानार्या? किमर्थं सैवं वदति?

   (इ) कः तस्याः निश्चयः?

# दशमः पाठः

## प्राणदानेन प्राणरक्षणम्।

शिबिः नाम नृपतिः कस्य मोदाय न भवति? तेन निजानां प्राणानां विनिमयेनापि शरणमागतस्य प्राणान् रक्षितुं प्रयत्नः कृतः।

एकदा देवानां नृपः वज्रपाणिः इन्द्रः अग्निश्च[1] शिबेस्सत्त्वं[2] परीक्षितुं तस्य राजधानीमागच्छेताम्। इन्द्रश्श्येनस्य[3] रूपमधारयत् वह्निश्च[4] कपोतस्य। स श्येनस्तं[5] कपोतमन्वसरत्। स वित्रस्तश्शिबेस्समीप[6] आगत्य तस्याङ्क उपाविशत्। अभाषत च तम्। यथा—

"साधवः प्राणानां विनिमयेनापि रक्ष्याणां जीवितं रक्षन्ति। अहं श्येनात् भीतः। मामेष[7] भक्षयति यदि त्वं मुञ्चसि" इति।

अत्रान्तरे स श्येनः[8] अपि तत्रागत्य व्याहरत्—

"भो नृपते, जीवः जीवस्य जीवनम्। एतद् मम भक्ष्यम्। एतेनाहमसून् धारयामि। अलमश्रूणां निपातेन। कृतमतिशोकेन। मा सन्तप। एतस्य विहगस्य मांसस्य भारेण समं तव शरीरस्य मांसं विकृत्य मह्यं प्रयच्छ। तेनाहं तुष्यामि। अन्यथा नास्त्युपायः" इति।

ततस्तथेति[9] स भूपतिः अवदत्। अनन्तरं स यथा यथा स्वमांसं स्वहस्तेनोत्कृत्य तुलायां तोलयति, तथा तथा स कपोतः अधः एव तिष्ठति। शीर्षात् परं न किमप्यवशिष्टम्। ततस्तस्यौदार्येण[10] सन्तुष्टः इन्द्रस्तस्मै[11] वरं प्रायच्छत्। तस्य प्रसादेन शिबेश्शरीरं[12] पूर्ववत् अभवत्। ततस्तौ[13] देवौ स्वर्गं प्रति प्रातिष्ठेताम्।

एतत् शुचि चरितं यः ध्यायेत् तस्य काचन पीडा न भवेत् इति पुराणेषु प्रसिद्धम्।

---

१ अग्निः + च = अग्निश्च; २ शिबेः + सत्वम् = शिबेस्सत्वम्; ३ इन्द्रः + श्येनस्य = इन्द्रश्श्येनस्य; ४ वह्निः + च = वह्निश्च; ५ सः + श्येनः + तं = स श्येनस्तं; ६ सः + वित्रस्तः + शिबेः + समीपे + आगत्य = स वित्रस्तश्शिबेस्समीप आगत्य; ७ एषः + भक्षयति = एष भक्षयति; ८ सः + श्येनः = स श्येनः; ९ ततः + तथा + इति = ततस्तथेति; १० ततः + तस्य + औदार्येण = ततस्तस्यौदार्येण; ११ इन्द्रः + तस्मै = इन्द्रस्तस्मै; १२ शिबेः + शरीरम् = शिबेश्शरीरम्; १३ ततः + तौ = ततस्तौ.

## VOCABULARY

अङ्क (*m.*) Lap.
अध: (*Indecl.*) Below. [Used with the Genitive of a noun.]
अनु+सृ [अनुसरति] To follow; to chase.
अलम् (*Indecl.*) Enough of. [Used with the Instrumental of a noun.]
अवशिष्ट (*pp. pass.*) Remaining; left behind.
असु (*m.*) Life. [Always used in the plural.]
कपोत (*m.*) A pigeon.
कृतम् (*Indecl.*) Enough of. [Used with the Instrumental of a noun.]
तुष् [तुष्यति] To be pleased.
निपात (*m.*) Dropping.
परीक्षितुम् (*Inf.*) For the purpose of testing.
प्र+स्था [प्रतिष्ठते] To start.
पूर्ववत् (*Indecl.*) As before.
भाष् [भाषते] To speak.
मोद (*m.*) Joy.
रक्ष्य (*pot. pass. p.*) Fit to be protected.
वज्रपाणि (*m.*) An epithet of Indra.
वि+आ+हृ [व्याहरति] To speak.
विकृत्य (*Ger.*) Having cut or carved.
विनिमय (*m.*) Exchange.
शुचि (*Adj.*) Pure.
श्येन (*m.*) A hawk.
सम्+तप् [सन्तपति] To grieve; to be heated.
समम् (*Indecl.*) Equal to. [Used with the Instrumental of a noun.]

GRAMMAR:—

7. 'शिबि', Masculine noun ending in 'इ'.

| | Sing. | Du. | Pl. |
|---|---|---|---|
| N. | शिबिः | शिबी | शिबयः |
| Ac. | शिबिम् | शिबी | शिबीन् |
| I. | शिबिना | शिबिभ्याम् | शिबिभिः |
| D. | शिबये | शिबिभ्याम् | शिबिभ्यः |
| Ab. | शिबेः | शिबिभ्याम् | शिबिभ्यः |
| G. | शिबेः | शिब्योः | शिबीनाम् |
| L. | शिबौ | शिब्योः | शिबिषु |
| V. | शिबे | शिबी | शिबयः |

Masculine nouns ending in 'इ' such as वज्रपाणि, अग्नि, etc. are similarly declined.

'साधु', Masculine noun ending in 'उ'.

| | Sing. | Du. | Pl. |
|---|---|---|---|
| N. | साधुः | साधू | साधवः |
| Ac. | साधुम् | साधू | साधून् |
| I. | साधुना | साधुभ्याम् | साधुभिः |
| D. | साधवे | साधुभ्याम् | साधुभ्यः |
| Ab. | साधोः | साधुभ्याम् | साधुभ्यः |
| G. | साधोः | साध्वोः | साधूनाम् |
| L. | साधौ | साध्वोः | साधुषु |
| V. | साधो | साधू | साधवः |

Masculine nouns ending in 'उ' such as असु, गुरु, etc. are similarly declined.

9 'वारि', Neuter noun ending in 'इ'.

| | Sing. | Du. | Pl. |
|---|---|---|---|
| N. | वारि | वारिणी | वारीणि |
| Ac. | वारि | वारिणी | वारीणि |
| I. | वारिणा | वारिभ्याम् | वारिभिः |
| D. | वारिणे | वारिभ्याम् | वारिभ्यः |
| Ab. | वारिणः | वारिभ्याम् | वारिभ्यः |
| G. | वारिणः | वारिणोः | वारीणाम् |
| L. | वारिणि | वारिणोः | वारिषु |
| V. | वारि / वारे | वारिणी | वारीणि |

Declinable words ending in 'इ' such as शुचि, सुरभि, etc. are similarly declined in the Neuter.

'अश्रु', Neuter noun ending in 'उ'.

| | Sing. | Du. | Pl. |
|---|---|---|---|
| N. | अश्रु | अश्रुणी | अश्रूणि |
| Ac. | अश्रु | अश्रुणी | अश्रूणि |
| I. | अश्रुणा | अश्रुभ्याम् | अश्रुभिः |
| D. | अश्रुणे | अश्रुभ्याम् | अश्रुभ्यः |
| Ab. | अश्रुणः | अश्रुभ्याम् | अश्रुभ्यः |
| G. | अश्रुणः | अश्रुणोः | अश्रूणाम् |
| L. | अश्रुणि | अश्रुणोः | अश्रुषु |
| V. | अश्रु / अश्रो | अश्रुणी | अश्रूणि |

Neuter nouns ending in 'उ' such as वसु, तालु, etc. are similarly declined.

SANDHI RULES:—

S. R. N0. 9.

| Preceded by | Final | Followed by | Result. |
|---|---|---|---|
| Any vowel | Visarga | क्, ख्, प् or फ् | The *visarga* remains unchanged. |
| ,, | ,, | च् or छ् | The *visarga* is changed to श् |
| ,, | ,, | ट् or ठ् | The *visarga* is changed to ष् |
| ,, | ,, | त् or थ् | The *visarga* is changed to स् |
| ,, | ,, | श् | The *visarga* remains unchanged or the *visarga* is changed to श् |
| ,, | ,, | ष् | The *visarga* remains unchanged or the *visarga* is changed to ष् |
| ,, | ,, | स् | The *visarga* remains unchanged or the *visarga* is changed to स् |

| | | | |
|---|---|---|---|
| E. g. | प्रयत्नः कृतः | = | प्रयत्नः कृतः । |
| | साधवः प्राणान् | = | साधवः प्राणान् । |
| | अग्निः च | = | अग्निश्च । |
| | रामः टीकते | = | रामष्टीकते । |
| | ततः तव | = | ततस्तव । |
| | शिवेः शरीरम् | = | शिवेः शरीरम् or शिवेश्शरीरम् । |
| | पाठः षोडशः | = | पाठः षोडशः or पाठष्षोडशः । |
| | शिवेः सत्त्वम् | = | शिवेः सत्त्वम् or शिवेस्सत्त्वम् । |

S. R. No. 10.

The *visarga* of सः and एषः is dropped before all vowels and consonants except अ.

If सः and एषः are followed by अ, this following अ, the *visarga* and the preceding अ are together changed to ओ. The following अ (which has changed to ओ together with the *visarga* and the preceding अ) may be shown by the *avagraha* (ऽ) sign.

The *visarga* of the Vocative particle भोः is dropped before all vowels and soft consonants, but remains unchanged before hard consonants.

| | | | | |
|---|---|---|---|---|
| E. g. | एषः | भक्षयति | — | एष भक्षयति । |
| | सः | कपोतः | — | स कपोतः । |
| | सः | वित्रस्तः | — | स वित्रस्तः । |
| | सः | अहम् | — | सोहम् or सोऽहम् । |
| | भोः | नृपते | — | भो नृपते । |

LANGUAGE-STUDY :—

१ शीर्षात् परं न किमप्यवशिष्टम् ।

२ तस्य काचन पीडा न भवेत् ।

चित्, चन, or अपि are added to the forms of किम् in all its cases and genders to get the sense of Indefinite pronouns. Thus कश्चन, कश्चित् or कापि mean 'some one', 'any one'; केनापि, केनचित् or कयाचन mean 'by some one', 'by any one'; किमपि, किञ्चन, or किञ्चित् mean 'some thing', 'any thing', 'a little', and so on.

PECULIAR CONSTRUCTIONS :—

१ तेन निजानां प्राणानां परित्यागेन शरणमागतस्य प्राणान् रक्षितुं प्रयत्नः कृतः ।
२ अहं श्येनात् भीतः ।
३ एतेनाहमसून् धारयामि ।
४ अलमश्रूणां निपातेन ।
५ कृतमतिशोकेन ।
६ एतस्य विहगस्य भारेण समं तव शरीरस्य मांसं मह्यं प्रयच्छ ।
७ देवौ स्वर्गं प्रति प्रातिष्ठेताम् ।
८ यथा यथा स्वमांसं स्वहस्तेनोत्कृत्य तुलायां तोलयति, तथा तथा स कपोतः अधः एव तिष्ठति ।

ADDITIONAL EXERCISES :—

तृणात् अपि लघुस्तूलः[1], तूलात् अपि च याचकः ।
वायुना किं न नीतः स मामेवं प्रार्थयेत् इति ॥
शैले[2] शैले न माणिक्यं, मौक्तिकं न गजे गजे ।
साधवः न हि सर्वत्र, चन्दनं न वने वने ॥
अतिदानात् बलिः बद्धः[3], अतिमानात् सुयोधनः ।
विनष्टः रावणः लौल्यात्[4], अति सर्वत्र वर्जयेत्[5] ॥

TRANSLATE :—

Hiraṇyakaśipu and Hiraṇyākṣa were brothers. Viṣṇu, having taken the form of a boar killed Hiraṇyākṣa. Therefore his brother became very angry* with Viṣṇu. He practised austere penance and begged this boon of Bramhadeva :–" Let no one of the men created by you be able to kill me." Bramhadeva

[ 1 Cotton; 2 A mountain; 3 Tied up; 4 Passion; 5 To give up. ]

* Use कुप्, to be angry. This root and others denoting 'anger', 'hatred', etc. govern the Dative of the person towards whom the feeling of anger is directed.

gave him that boon. He became very arrogant on account of that boon and began to trouble the whole world.

Kayādhū was his wife. She had† a son by name Pralhāda. He was a great devotee of Viṣṇu. He ( Hiraṇyakaśipu ) began to trouble him too. Then Viṣṇu became irritated and assuming the form of Narasiṃha slew him with his claws in the evening sitting on the threshold.

**New words** :—बन्धुः; वराहः; धारयित्वा; कुप्; उग्र; तपश्चर्या; याच् ; निर्मित; हन्तुम् ; समर्थ; आ+रभ् ; परम; भक्तः ; प्रक्षुभ्य; नरसिंहः; नखम् ; देहली; उपविश्य.

HOME-WORK :—

1. Write the story of Śibi in the form of a conversation.
2. Translate the verses given as Additional Exercises.
3. Decline fully :—वह्नि, वायु and शुचि.

---

† See foot-note on page 39.

# एकादशः पाठः

## मन्त्रसिद्धिः।

( ततः प्रविशति व्याकुलो विदूषकः )

विदूषकः—( स्वगतम् ) अस्माकं प्रियो वयस्यो महावीरः सदैव मध्ये वनितानां सङ्गे च दुर्मित्रैस्सह रमते। देवी कीर्तिर्भृशं दुःखिता।



देवी सुमतिः परं विषादमुपगता। देव्यपि नीतिर्दूरं निरस्ता। ता मासेनापि न पश्यति। ताभ्यः सदैव क्रुद्धः। तासां सङ्गे न कथमपि तुष्टिं

---

१ व्याकुलः + विदूषकः = व्याकुलो विदूषकः; २ प्रियः + वयस्यः = प्रियो वयस्यः; ३ वयस्यः + महावीरः = वयस्यो महावीरः; ४ कीर्तिः + भृशं = कीर्तिर्भृशं; ५ नीतिः + दूरं = नीतिर्दूरं; ६ ताः + मासेन = ता मासेन.

लभते । गणिका[७] एव वयस्यस्य प्रीतेः पात्रम् । किन्तु महिष्यो[८] दूरं निरस्ताः । देव्या सुमत्याहूयाहमुक्तः "माणवक, पण्डितो[९]ऽसि । तथा यतस्व यथार्यपुत्रो[१०]ऽस्मासु पूर्ववत् स्निह्येत्" इति । मयाप्युक्तम् । "बहु दुष्करमेतत् । बहुना धनेन साध्यम् । प्रियाराधनं नाम व्रतं कार्यम्" इति । सापि धनस्य राशिमेव मह्यमयच्छत् । मयापि व्रतमारब्धमेव । तथापि किं व्रतेन ? किं बोधेन ? भवतु । वयस्यं द्रष्टुं यते । आः ! एषात्र प्रतीहारी मदालसा गच्छति । पृच्छामि 'कुत्र वयस्यः' इति । (आकाशे) मदालसे, कुत्र वयस्यः ? (आकर्ण्य) किं भणसि ? गत्वा पश्येति ? कथमेवमुन्मत्तासि ? मम वार्द्धक्यमपि दृष्ट्वा न लज्जसे एवं वक्तुम् ? (कर्णं दत्त्वा) किं भणसि ? देवस्य पुरतस्तवाविनयं कथयामीति ? कथं ममाविनयः ? (पुनः कर्णं दत्त्वा) किं भणसि ? अरे, एषा गालिं यच्छति । हन्त, का गतिः ! अथवा किमत्र चित्रम् ? अपवृत्ते नृपे, परिजनः प्रमत्तो भवत्येव ! भवतु गच्छामि । कोऽय[११]मित[१२] एवागच्छति ? अमात्यः सुमन्त्र[१३] इति मन्ये । तिष्ठामि तावत् ।

सुमन्त्रः—(प्रविश्य) भो माणवक, किमेवं विषण्णस्तिष्ठसि ?

विदूषकः—कथमन्यथा भवामि ? अखिला[१४] देव्यो विषण्णाः कथमपि धृतिं न लभन्ते । वयस्यस्य प्रवृत्तिमपि न लभे । तथापि मया तासां कृते प्रियाराधनं नाम व्रतं ह्यो[१५] रात्रावारब्धम् । पश्यामः किं भवतीति ।

सुमन्त्रः—अधुना नास्ति तव व्रतेन तासां किमपि प्रयोजनम् ।

---

७ गणिकाः + एव = गणिका एव; ८ महिष्यः + दूरं = महिष्यो दूरं; ९ पण्डितः + असि = पण्डितोऽसि; १० आर्यपुत्रः + अस्मासु = आर्यपुत्रोऽस्मासु; ११ कः + अयम् = कोऽयम्; १२ कोऽयम् + इतः + एव = कोऽयमित एव; १३ सुमन्त्रः + इति = सुमन्त्र इति; १४ अखिलाः + देव्यः + विषण्णाः = अखिला देव्यो विषण्णाः; १५ ह्यः + रात्रावारब्धम् = ह्यो रात्रावारब्धम्.

विदूषकः—कथम् ?

सुमन्त्रः—अरे, तेन दुर्मित्रेणाविवेकेन दुर्गतिं नीतो देवः। तथापि नावबोधति। स दुष्ट[16] एव तस्य विश्वासस्य स्थानम्। देवेषु ब्राह्मणेषु च तस्य भक्तिर्नष्टा[17]। तद्—( इत्यर्धोक्ते )

विदूषकः—आः सत्यम्! मयि महाब्राह्मणेऽपि नास्ति तस्य भक्तिः।

सुमन्त्रः—तद् दृष्ट्वास्माभिश्चिन्तित[18] उपायः। तथास्माभिः कृतं यथैष दुष्टोऽविवेको[19] महिषीः कामयेत। सोऽपि कीर्तिं सुमतिं नीतिं चापाहरत्। एतया दुष्टया कृत्या क्रुद्धेन देवेन स हतो देव्यश्च रक्षिताः। एवं फलितोऽस्माकं[20] मन्त्रः। अधुना किं तव व्रतेन ?

विदूषकः—भो अमात्य, न युष्माकं मन्त्रः फलितः, किन्त्वस्माकं महाब्राह्मणानां मन्त्राः फलिताः। इदं व्रतस्य फलम्। अधुना प्रभूतां दक्षिणां लभे। गच्छामि तावत्।

सुमन्त्रः—अरे तिष्ठ। इत[21] एवागच्छति देवीभिः सह जिष्णुर्देवः[22]।

[ ततः प्रविशति देवीभिः सहितो महावीरः। ]

विदूषकः—स्वस्ति वयस्याय। स्वस्ति देवीभ्यः। स्वस्ति समस्तेभ्यः। फलितं मम व्रतम्। दक्षिणां यच्छत महाब्राह्मणाय।

देव्यो[23] महावीरश्च—किं यच्छामः ?

विदूषकः—अस्यां शुभायां वेलायां, वत्सेन सहितां धेनुं, सुवर्णानां शतं च दत्त्वाशीर्वादं लभध्वम्।

देव्यो महावीरश्च—धेनूनां शतं, सुवर्णानां सहस्रमपि दत्तम्।

---

१६ दुष्टः + एव = दुष्ट एव; १७ भक्तिः + नष्टा = भक्तिर्नष्टा; १८ चिन्तितः + उपायः = चिन्तित उपायः; १९ दुष्टः + अविवेकः + महिषीः = दुष्टोऽविवेको महिषीः; २० फलितः + अस्माकं = फलितोऽस्माकं; २१ इतः + एव = इत एव; २२ जिष्णुः + देवः = जिष्णुर्देवः; २३ देव्यः + महावीरश्च = देव्यो महावीरश्च.

विदूषकः—सन्तुष्टोऽस्मि[24]। अयमपि दत्त आशीर्वादः। "शान्तिरस्तु[25], पुष्टिरस्तु[26], तुष्टिरस्तु[27], वृद्धिरस्तु[28], अविघ्नमस्तु, आयुष्यमस्तु, आरोग्यमस्तु, कर्मसमृद्धिरस्तु[29], धर्मसमृद्धिरस्तु, शास्त्रसमृद्धिरस्तु, पुत्रसमृद्धिरस्तु, धनधान्यसमृद्धिरस्तु।"

तथा च— "स्वस्ति प्रजाभ्यः, परिपालयन्तां
न्याय्येन मार्गेण महीं महीशाः।
गोब्राह्मणेभ्यः शुभमस्तु लोके
लोकाः समस्ताः ससुखा भवन्तु॥
काले वर्षतु पर्जन्यः, पृथिवी सस्यशालिनी।
देशोऽयं[30] क्षोभरहितो[31] ब्राह्मणाः सन्तु निर्भयाः॥
ॐ शान्तिः शान्तिः शान्तिः।"

[ इति निष्क्रान्ताः। ]

## VOCABULARY

अपवृत्त (*Adj.*) One leading an objectionable mode of life.
अविनय (*m.*) Rudeness.
आहूय (*Ger.*) Having invited or called.
उक्त (*pp. pass.*) said; spoken; told.
उपगत (*pp. pass.*) Approached; come to.
कम् [ कामयते ] To love; to desire for.
क्षोभरहित (*Adj.*) Free from trouble.
गणिका (*f.*) A courtezan.
चित्र (*n.*) Wonder.
जिष्णु (*Adj.*) Victorious.
तुष्टि (*f.*) Satisfaction.
धृति (*f.*) Courage; comfort.
निरस्त (*pp. pass.*) Cast off; thrown away.
पुरतः (*Indecl.*) In front of.
पुष्टि (*f.*) Prosperity; fatness; increase.
प्रच्छ् [ पृच्छति ] To ask. [This root generally governs two objects.]

२४ सन्तुष्टः + अस्मि = सन्तुष्टोऽस्मि; २५ शान्तिः + अस्तु = शान्तिरस्तु; २६ पुष्टिः + अस्तु = पुष्टिरस्तु; २७ तुष्टिः + अस्तु = तुष्टिरस्तु; २८ वृद्धिः + अस्तु = वृद्धिरस्तु; २९ कर्मसमृद्धिः + अस्तु = कर्मसमृद्धिरस्तु; ३० देशः + अयं = देशोऽयं; ३१ क्षोभरहितः + ब्राह्मणाः = क्षोभरहितो ब्राह्मणाः.

प्रतीहारी (*f.*) A female attendant.

प्रवृत्ति (*f.*) News; information.

भण् [ भणति ] To speak; to say.

महिषी (*f.*) A queen.

मास (*m.*) A month.

रम् [ रमते ] To sport; to enjoy.

राशि (*m.*) A heap.

वक्तुम् (*Inf.*) For the purpose of speaking; in order to speak.

वनिता (*f.*) A woman.

वयस्य (*m.*) A friend.

सस्यशालिनी (*f.*) Yielding plenty of corn; fertile.

स्निह् [ स्निह्यति ] To love; to feel affection for. [ Used with the Locative of a noun. ]

स्वस्ति (*Indecl.*) Hail! Adieu! [ Used with the Dative of a noun. ]

GRAMMAR :—

११ 'प्रीति', Feminine noun ending in 'इ'.

| | Sing. | Du. | Pl. |
|---|---|---|---|
| N. | प्रीतिः | प्रीती | प्रीतयः |
| Ac. | प्रीतिम् | प्रीती | प्रीतीः |
| I. | प्रीत्या | प्रीतिभ्याम् | प्रीतिभिः |
| D. | प्रीत्यै / प्रीतये | प्रीतिभ्याम् | प्रीतिभ्यः |
| Ab. | प्रीत्याः / प्रीतेः | प्रीतिभ्याम् | प्रीतिभ्यः |
| G. | प्रीत्याः / प्रीतेः | प्रीत्योः | प्रीतीनाम् |
| L. | प्रीत्याम् / प्रीतौ | प्रीत्योः | प्रीतिषु |
| V. | प्रीते | प्रीती | प्रीतयः |

Feminine nouns ending in 'इ' such as नीति, कीर्ति, etc. are similarly declined.

१२ 'धेनु', Feminine noun ending in 'उ'.

| | Sing. | Du. | Pl. |
|---|---|---|---|
| N. | धेनुः | धेनू | धेनवः |
| Ac. | धेनुम् | धेनू | धेनूः |
| I. | धेन्वा | धेनुभ्याम् | धेनुभिः |
| D. | धेन्वै / धेनवे | धेनुभ्याम् | धेनुभ्यः |
| Ab. | धेन्वाः / धेनोः | धेनुभ्याम् | धेनुभ्यः |
| G. | धेन्वाः / धेनोः | धेन्वोः | धेनूनाम् |
| L. | धेन्वाम् / धेनौ | धेन्वोः | धेनुषु |
| V. | धेनो | धेनू | धेनवः |

Feminine nouns ending in 'उ' such as तनु, चञ्चु, etc. are similarly declined.

ABOUT ADJECTIVES :—

Adjectives ending in 'इ' are declined like शिवि in the masculine, like प्रीति in the feminine, and like वारि in the neuter.

Adjectives ending in उ are declined like साधु in the masculine, like धेनु in the feminine, and like अश्रु in the neuter.

But if the final vowel of adjectives ending in 'उ' is not preceded by a conjunct consonant, a second feminine base may be optionally formed by adding 'ई' to them. These feminine bases ending in 'ई' are declined like जननी.

| E. g. | Adjectives | Feminine bases. |
|---|---|---|
| | साधु | साधु or साध्वी |
| | बहु | बहु or बह्वी |
| | मृदु | मृदु or मृद्वी |
| | गुरु | गुरु or गुर्वी |
| But | पाण्डु | पाण्डु only |
| | वल्गु | वल्गु only |

**Exceptions** :—

The feminine base of पङ्गु is पङ्गू; and that of भीरु is भीरु or भीरू. These feminine bases ending in ऊ are declined like वधू.

SANDHI RULES :—

S. R. No. 11.

| Preceded by | Final | Followed by | Result |
| --- | --- | --- | --- |
| अ | **Visarga** | Any soft consonant | The preceding अ and the *visarga* are to-gether changed to ओ. |
| आ | ,, | ,, | The *visarga* is dropped and no *sandhi* after that. |
| Any vowel except अ or आ | ,, | ,, | The *visarga* is changed to र्. This र् is dropped if followed by र् and the preceding vowel if short is made long. |
| अ | ,, | अ | The *visarga*, the preceding अ and the following अ are together changed to ओ. The following अ that has merged in ओ is generally shown by the *avagraha* ( ऽ ) sign. |
| अ | ,, | Any vowel except अ | The *Visarga* is dropped and no *sandhi* after that. |
| आ | ,, | Any vowel | The *Visarga* is dropped and no *sandhi* after that. |
| Any vowel except अ or आ | ,, | Any vowel | The *Visarga* is changed to र्. This र् simply combines with the following vowel. |

| | | | |
|---|---|---|---|
| E. g. प्रियः | वयस्यः | — | प्रियो वयस्यः। |
| ताः | मासेन | — | ता मासेन। |
| कीर्तिः | भृशम् | — | कीर्तिर्भृशम्। |
| सेनाभिः | रक्षितः | — | सेनाभिर् रक्षितः = सेनाभी रक्षितः। |
| आर्यपुत्रः | अस्मासु | — | आर्यपुत्रोऽस्मासु। |
| वयस्यः | इति | — | वयस्य इति। |
| गणिकाः | एव | — | गणिका एव। |
| शान्तिः | अस्तु | — | शान्तिरस्तु। |

LANGUAGE-STUDY :—

१ गणिका एव वयस्यस्य प्रीतेः पात्रम्।
स दुष्ट एव तस्य विश्वासस्य स्थानम्।

When, as in the above sentences, 'पात्रम्', 'स्थानम्', etc. are used as predicates in a sentence, they are always used in the *neuter gender* and *singular number*.

In such cases the forms of 'अस्' (to be) are understood. If these forms are to be used, they must be made to agree with the subject proper in person and number; but not with the words 'पात्रम्', 'स्थानम्', etc.

E. g.—गणिका एव वयस्यस्य प्रीतेः पात्रमासन्।

PECULIAR CONSTRUCTIONS :—

१ ताभ्यः सदैव क्रुद्धः।

२ आर्यपुत्रोऽस्मासु पूर्ववत् स्निह्येत्।

३ स्वस्ति देवीभ्यः।

४ तथा यतस्व, यथार्यपुत्रोऽस्मासु पूर्ववत् स्निह्येत्।

५ किं व्रतेन? किं बोधेन?

६ अधुना तव व्रतेन नास्ति तासां प्रयोजनम्।

HOME-WORK :—

1. Write down in brief the story of मन्त्रसिद्धि.
2. Answer the following questions in Sanskrit :—
   (अ) का एतस्य नृपस्य महिष्यः ?
   (आ) किमर्थं स तासु तुष्टिं नालभत ?
   (इ) तस्य प्रीतिं लब्धुं ताभिः क उपायः कृतः ?
   (ई) अमात्यस्य क उपायः ?
   (उ) कस्योपायः सिद्धिं गतः ? अमात्यस्य विदूषकस्य वा ?
   (ऊ) विदूषकेण क आशीर्वादो दत्तः ?
3. Dissolve the following *sandhis* :—

   पुरतस्तवाविनयम्; आयुष्यमस्तु; दत्त्वाशीर्वादम्; देव्यपि; देव्यश्च; किन्त्वस्माकम्.

# द्वादशः पाठः

## ममान्वयः ।

एतत् प्रायेण सर्वेषां श्रुतिविषयमापतितमेव यथा स्वर्गलोके सुराङ्गनाः सन्तीति । तासामेतानि कुलानि । एकं कमलयोनेः समुत्पन्नम् । अन्यत् वेदेभ्यः सम्भूतम् । अन्यत् अग्नेरुद्भूतम् । अन्यत् पवनात् प्रसूतम् । अन्यत् अमृतात् उत्थितम् । अन्यत् जलात् जातम् । अन्यत् अर्ककिरणेभ्यो निर्गतम् । अन्यत् सोमरश्मिभ्यो निष्पतितम् । अन्यत् भूमेरुद्भूतम् । अन्यत् सौदामिनीभ्यः प्रवृत्तम् । अन्यत् मृत्युना निर्मितम् । अपरं मकरकेतुना समुत्पादितम् । अन्यत् तु दक्षस्य प्रजापतेरतिप्रभूतानां कन्यकानां मध्ये द्वे सुते मुनिररिष्टा चाभवताम् । ताभ्यां गन्धर्वैः सह कुलद्वयं जातम् ।

अत्र मुनेस्तनयश्चित्ररथो नाम समुत्पन्नः । स किल शैशव एव सर्वेषां गन्धर्वाणामाधिपत्यमलभत । तस्य हेमकूटो नाम निवासः ।

अरिष्टायास्तु हंसो नाम पुत्रस्तस्मिन् द्वितीये गन्धर्वकुले चित्ररथेनाभिषिक्तो बाल एव राज्यपदमध्यगच्छत् । तस्यापि स एव गिरिरधिवासः ।

यत् तु सोममयूखेभ्यः सम्भूतं सुराङ्गनानां कुलं तस्मात् त्रिभुवननयनाभिरामा, द्वितीयेव गौरी, गौरी नाम कन्यका प्रसूता । तां च हंसः, मन्दाकिनीमिव क्षीरसागरः, पर्यणयत् । सा तु मकरकेतनेनेव रतिः, शरत्समयेनेव कमलिनी, हंसेन संयोजितातीवामोदत ।

तयोश्च तादृशयोरहमीदृशी विगतलक्षणा शोकायैव केवलमेकैवात्मजा समुत्पन्ना ।

—कादम्बरी ( Adapted )

## VOCABULARY

अधिवास (*m.*) An abode; a dwelling place.

अन्य (*Pron.*) Another; different.

अर्ककिरण (*m.*) A ray of the sun.

आत्मजा (*f.*) A daughter.

ईदृशी (*Adj. f. base*) Such; of this kind.

कमलयोनि (*m.*) The Creator; Brahman.

गौरी (*f.*) An epithet of Pārvatī.

त्रिभुवन-नयनाभिरामा (*Adj. f. base*) Attractive to the eyes of the three worlds.

निवास (*m.*) An abode.

परि+नी [परिणयति] To marry.

प्रवृत्त (*pp. pass.*) Started; originated.

प्रायेण (*Indecl.*) Generally.

मकरकेतन, मकरकेतु (*m.*) The god of love; Madana.

मन्दाकिनी (*f.*) The Ganges.

रति (*f.*) The name of Madana's wife.

विगत-लक्षणा (*Adj. f. base*) Inauspicious.

शरत्समय (*m.*) The spring season.

श्रुतिविषय (*m.*) Hearing; the range of the ear.

शैशव (*n.*) Childhood.

सुता (*f.*) A daughter.

सुराङ्गना (*f.*) A heavenly nymph.

सोम-मयूख, सोम-रश्मि (*m.*) A ray of the moon.

सौदामिनी (*f.*) The lightning.

GRAMMAR :—

### Pronouns

'सर्व' Masculine

| | Sing. | Du. | Pl. |
|---|---|---|---|
| N. | सर्वः | सर्वौ | सर्वे |
| Ac. | सर्वम् | सर्वौ | सर्वान् |
| I. | सर्वेण | सर्वाभ्याम् | सर्वैः |
| D. | सर्वस्मै | सर्वाभ्याम् | सर्वेभ्यः |
| Ab. | सर्वस्मात् | सर्वाभ्याम् | सर्वेभ्यः |
| G. | सर्वस्य | सर्वयोः | सर्वेषाम् |
| L. | सर्वस्मिन् | सर्वयोः | सर्वेषु |

'सर्व' Feminine

| | Sing. | Du. | Pl. |
|---|---|---|---|
| N. | सर्वा | सर्वे | सर्वाः |
| Ac. | सर्वाम् | सर्वे | सर्वाः |
| I. | सर्वया | सर्वाभ्याम् | सर्वाभिः |
| D. | सर्वस्यै | सर्वाभ्याम् | सर्वाभ्यः |
| Ab. | सर्वस्याः | सर्वाभ्याम् | सर्वाभ्यः |
| G. | सर्वस्याः | सर्वयोः | सर्वासाम् |
| L. | सर्वस्याम् | सर्वयोः | सर्वासु |

'सर्व' Neuter.

| | Sing. | Du. | Pl. |
|---|---|---|---|
| N. | सर्वम् | सर्वे | सर्वाणि |
| Ac. | सर्वम् | सर्वे | सर्वाणि |

The rest like the masculine.

SOME IRREGULARITIES :—

1. The pronoun प्रथम is declined like भूप in the masculine, like सीता in the feminine, its feminine base being प्रथमा, and like वन in the neuter. But it has an optional form in the Nominative plural masculine like that of सर्व. Thus its Nominative plural masculine will be प्रथमाः or प्रथमे.

2. The pronoun द्वितीय is declined like भूप in the masculine, like सीता in the feminine, its feminine base being द्वितीया, and like वन in the neuter. But in all the three genders it has optional forms like those of सर्व in the Dative, Ablative, Genitive and Locative singular. Thus :—

| | Masculine and Neuter Singular | Feminine Singular |
|---|---|---|
| Dative | द्वितीयाय, द्वितीयस्मै | द्वितीयायै, द्वितीयस्यै |
| Ablative | द्वितीयात्, द्वितीयस्मात् | द्वितीयायाः, द्वितीयस्याः |
| Genitive | द्वितीयस्य | द्वितीयायाः, द्वितीयस्याः |
| Locative | द्वितीये, द्वितीयस्मिन् | द्वितीयायाम्, द्वितीयस्याम् |

3. The pronouns अन्य and इतर are declined like सर्व in all the three genders except in the Nominative and Accusative singular neuter where the forms are अन्यत्-अन्यद् and इतरत्-इतरद् respectively.

4. The pronouns स्व, पर, अपर and पूर्व are declined like सर्व in all the three genders; but they have optional forms in the Ablative and Locative singular, masculine and neuter, and in the

